'उणादयो बहुलम्' ( सू ३१६१ ) इति यावद्येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोऽसि ? अयमागच्छामि, अयमागमम्। कदा गमिष्यसि। एष गच्छामि गमिष्यामि वा। २७६० **आशंसायां भूतवच्च ( ३-३-१३२ )** वर्तमानसामीप्य इति नानुवर्तते। भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम्। देवश्चेदवर्षीद् वर्षति

---

गतं प्रति प्रश्नः। अयमागच्छामीत्युत्तरम्। अव्यवहितपूर्वकाले आगतवानस्मीत्यर्थः। वर्तमानसमीपकाले भूते लट्। अयमित्यनेन आगमनकालीनं प्रस्वेदपरिकरबन्धादियुक्तं रूपं निर्दिश्यते इदानीमागमनं सूचयितुम्। **आगममिति**। वर्तमानवत्त्वाभावे भूते लुङ्। कदा गमिष्यसीति गमनात्प्राक् प्रश्ने, एष गच्छामि इत्युत्तरम्। अव्यवहितोत्तरकाले गमिष्यामीत्यर्थः। एष इति तु अयमितिवद् व्याख्येयः। वर्तमानकालसमीपे भविष्यति लट्। **गमिष्यामि वेति**। वर्तमानवत्त्वाभावे भविष्यति लृट्। **आशंसायां भूतवच्च। नानुवर्तते इति**। अत्र व्याख्यानमेव शरणम्। अप्राप्तस्य प्रियस्य प्राप्तीच्छा आशंसा। सा च भविष्यद्विषयैव। भूते इच्छाविरहात्, तदाह **भविष्यति काले इति। देवश्चेदिति**। देवः पर्जन्यः, अवर्षीचेद् धान्यमवाप्स्म। वर्षति चेद् वपामः। वर्षिष्यति चेद् वप्स्याम इत्यन्वयः **भूतवद्भावाद्**

---

मित्यादि सिद्धम्। **येनोपाधिनेति**। धातुविशेषाद्युपाधिना। तथा हि पूङ्यजोः शानन्विहितः स ताभ्यामेव धातुभ्यां भवति न तु धात्वन्तरात्। तच्छीलादिविशिष्टे कर्तरि 'अलंकृञ्–' इत्यारभ्य 'भ्राजभास–' इति यावद् ये इष्णुजादय उक्तास्तेऽपि दिभ्यो धातुभ्यस्तस्मिन्नुपाधौ सत्येव भवन्ति। कदा आगतोऽसीति भूतकालेन वाक्यम्, आगच्छामीत्युदाहरणे भूतकालाभिव्यक्तयेऽयमिति प्रयोगस्त्विदानीमवागममिति वर्तमानसमीपभूतकालद्योतनाय। तेन ह्यागमनाविनाभूतं यद् रूपं धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते। एवं कदा गमिष्यसीति भविष्यत्कालेन प्रश्नवाक्यम्। गच्छामीत्युदाहरणे भविष्यत्कालाभिव्यक्तये एष इति प्रयोगस्तु इदानीमेव गमिष्यामीति वर्तमानसमीपभविष्यत्कालद्योतनाय। तेन हि गमनाऽविनाभूतं यद् रूपं परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते। न च कदेति प्रश्ने उत्तरवाक्ययोः कालानुपादानादसंगतिः शङ्क्या, उत्तरत्रायमेषशब्दाभ्यामिदानीमिति कालावगमात्। सामीप्ये किम्, कदा आगतो भवान्। अस्मान्मासात्पूर्वस्मिन्मासे आगच्छम्। एतच्च सूत्रमाकरे प्रत्याख्यातम्। गङ्गासमीपे गङ्गात्वारोपवद्वर्तमानसमीपे वर्तमानत्वारोपसंभवात्। **आशंसायाम्**। आशंसनमाशंसा अप्राप्तस्य प्राप्तुमिच्छा। आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम्। आशंसायां किम्, गमिष्यति।

वर्षिष्यति वा धान्यमवाप्स्म वपामो वप्स्यामो वा। सामान्यातिदेशे विशेषानतिदेशः, तेन लङ्लिटौ न। २७६१ क्षिप्रवचने लृट्। (३-३-१३३) क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात्। वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति। शीघ्रं वप्स्यामः। नेति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः। २७६२ आशंसावचने लिङ्। (३-३-१३४) आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत्। गुरुश्चेदुपेयादाशंसेऽधीयीय। आशंसे क्षिप्रमधीयीय। २७६३ नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः।

---

भविष्यति लुङ्, अवर्षीदिति अवाप्स्मेति च भवति। वपधातोर्लुङि उत्तमपुरुषबहुवचने अवाप्स्मेति भवति। वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लुङ्। वर्तमानवत्त्वपक्षे तु लट्। तदुभयाभावे तु लृट्। ननु भूतवत्त्वपक्षे लङ्लिटावपि कुतो न स्यातामित्यत आह **सामान्यातिदेशे इति**। भूतत्वसामान्ये विहितस्यातिदेशादनद्यतनभूतत्वविशेषविहितयोर्लङ्लिटोर्नातिदेश इत्यर्थः। एतच्च भाष्ये स्पष्टम्। **क्षिप्रवचने लृट्**। वचनग्रहणात् क्षिप्रपर्याये इति लभ्यते, तदाह **क्षिप्रपर्याये इति**। **पूर्वविषये इति**। आशंसायामित्यर्थः। 'आशंसायां भूतवच्च' इत्यस्यापवादः। ननु क्षिप्रवचने नेत्येतावतैव आशंसायां क्षिप्रपर्याये उपपदे भविष्यति न भूतवद् न वर्तमानवदिति लाभाल्लृड्ग्रहणमनर्थकमित्यत आह **नेति वक्तव्ये इति**। क्षिप्रवचने नेत्युक्ते 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायेन भविष्यत्सामान्ये विहितस्य लृट एव निषेधः स्यात्, न तु लुटः, तस्य अनद्यतनभविष्यद्विशेषविधानात्। लृड्ग्रहणे तु उक्तविषये लृडेव स्यात्, न तु लकारान्तरमिति लाभाल्लुटोऽपि विषये लृडेवेति लभ्यत इत्यर्थः। **श्वः शीघ्रं वप्स्याम इति**। अनद्यतनत्वद्योतनाय श्वश्शब्दः। अत्र न लुडिति भावः। **आशंसावचने लिङ्**। आशंसायाः प्राप्तीच्छाया भूते असंभवाद् भविष्यतीति लभ्यत इति मत्वाह **भविष्यतीति**। 'आशंसायां भूतवच्च' इत्यस्यापवादः, तदाह **न तु भूतवदिति**। **गुरुश्चेदिति**। गुरुरुपेयाच्चेत् क्षिप्रमधीयीयेत्याशंसे इत्यन्वयः। क्षिप्रयोगेऽपि परत्वाल्लिङेव न तु

---

**क्षिप्रवचने**। वचनग्रहणं स्वरूपग्रहणनिरासार्थम्, तदाह **क्षिप्रपर्याय इति**। **पूर्वविषय इति**। आशंसायामित्यर्थः। तेन पूर्वलकारापवादोऽयम्। **आशंसावचने** भूतवर्तमानवत्प्रत्यययोरपवादः। न भूतवदिति न वर्तमानवदित्यपि बोध्यम्। **आशंसेऽधीयीयेति**। एवं प्रार्थये अधीयीय इच्छामो वयमधीयीमहीत्यादि ज्ञेयम्। **क्षिप्रमिति**। क्षिप्रप्रयोगेऽपि परत्वाल्लिङिति भावः। **नानद्यतन**। भूतानद्यतने लङ्विहितो भविष्यत्यनद्यतने तु लुट् तौ चानयोरर्थयोर्निषिध्येते, तदाह

( ३-३-१३५ ) क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न । यावज्जीवमन्नमदाद्दास्यति वा। सामीप्यं तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित, सोमेनायष्ट। येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते, सोमेन यक्ष्यते । २७६४ भविष्यति मर्यादावचनेऽवरस्मिन् ( ३-३-१३६ ) भविष्यति काले मर्यादोक्ताववरस्मिन्प्रविभागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्य आपाटलिपुत्रा-

---

लुङिति भावः। **नानद्यतनवत्** । क्रियायाः प्रबन्धः सातत्यम्, तदाह **क्रियायाः सातत्ये इति** । अनद्यतनवदित्यनेन अनद्यतने भूते भविष्यति च विहितौ लङ्लुटौ विवक्षितौ, तदाह **लङ्लुटौ नेति** । अनद्यतने भूते लङ् न भवति । भविष्यत्यनद्यतने तु लुङ् नेत्यर्थः । क्रियासातत्ये लङ्निषेधमुदाहरति **यावज्जीवमन्नमदादिति** । लुङि 'गातिस्था–' इति सिचो लुक् । सामीप्ये उदाहरिष्यन्नाह **सामीप्यमिति** । **येयमिति** । पौर्णमास्या उपरि कृष्णपक्षे कतिपयाहोरात्रैः व्यवधानेऽपि सामीप्यमस्त्येव, पौर्णमास्यन्तरेण सजातीयेन व्यवधानाभावात् । **आधितेति** । धाधातोर्लुङि 'स्थाघ्वोरिच्च' इति धाधातोरित्त्वं सिचः कित्त्वं च । 'ह्रस्वादङ्गात्' इति सिचो लोपः । **सोमेनायष्टेति** । येयं पौर्णमास्यतिक्रान्ता तस्यामित्यनुषज्यते । अथ क्रियासातत्ये लुटो निषेधमुदाहरति **येयममावास्येति सोमेन यक्ष्यते इति** । येयममावास्या आगामिनी तस्यामित्यनुषज्यते । **भविष्यति मर्यादा** । अवरस्मिन्निति च्छेदः । **अनद्यतनवन्नेति** । लुट् नेत्यर्थः । अक्रियाप्रबन्धार्थमिति भाष्यम् । असामीप्यार्थं चेति कैयटः । **योऽयमिति** । कस्मिंश्चिज्जनपदविशेषे वसतः पाटलिपुत्राख्यं नगरविशेषं जिगमिषोरिदं वाक्यम् । मध्येमार्गं कौशाम्बी नाम काचिन्नगरीति स्थितिः । तत्र आपाटलिपुत्राद्

---

**लङ्लुटौ नेति** । एवं च भूते लुङ् भविष्यति तु लृङित्याशयेनोदाहरति **अन्नमदाद् दास्यतीत्यादि** । **अग्नीनिति** । आहवनीयादीन् । **भविष्यति मर्यादा** । अक्रियाप्रबन्धार्थमसामीप्यार्थं चेदं वचनम् । नानद्यतनवदित्यनुवर्तते इत्याह **अनद्यतनवन्नेति** । लुडत्र नेत्यर्थः । इह सूत्रे देशकृता मर्यादा उत्तरत्र कालकृता, तत्र विशेषं वक्ष्यति **तस्य यदवरमिति** । पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः । कौशाम्ब्याः पूर्वमिति यावत् । भविष्यति किम्, योऽध्वा अतिक्रान्त आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपिबाम । मर्यादावचने इति किम्, योऽध्वा गन्तव्यो निरवधिकस्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः । अवरस्मिन्निति किम्, योऽध्वा गन्तव्य आपाटलिपुत्रात्तस्य यत्परं

तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः। २७९५ कालविभागे चानहोरात्राणाम्। (३-३-१३७) पूर्वसूत्रं सर्वमनुवर्तते। अहोरात्रसम्बन्धिनि विभागे प्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। अनहोरात्राणां किम्-योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे। २७९६ परस्मिन्

---

योऽयं गन्तव्योऽध्वा तस्य अध्वनो मध्यवर्तिन्याः कौशाम्ब्या यदवरं पूर्वप्रदेशः तत्र सक्तून् श्वःप्रभृति पास्याम इति योजना। अत्र कौशाम्ब्या इति मर्यादा गम्यते। अवरमित्यनेन अवरत्वं गम्यते। अत्र भविष्यत्यनद्यतने लुड् न, किंतु लृडेवेति भावः। **कालविभागे। पूर्वसूत्रमिति।** 'भविष्यति मर्यादावचनेऽवरस्मिन्' इति सूत्रमित्यर्थः। ननु कालमर्यादायामपि पूर्वसूत्रेणैव सिद्धमित्यत आह **अहोरात्रेति।** तथा च अहोरात्रसंबन्धिनि प्रविभागे 'भविष्यति मर्यादावचने' इत्युक्तविधिर्न भवतीत्यर्थः। ननु 'भविष्यति मर्यादावचनेऽवरस्मिन् कालविभागे चानहोरात्राणाम्' इत्येकमेव सूत्रं कुतो नेत्यत आह **योगविभाग उत्तरार्थ इति।** इदमुत्तरसूत्रे स्पष्टीभविष्यति। **योऽयं वत्सर आगामीति।** कालतो मर्यादायामुदाहरणम्। **आग्रहायण्या इति।** मार्गशीर्षपौर्णमास्या इत्यर्थः। **युक्ता इति।** नियमयुक्ता इत्यर्थः। **अध्येष्यामहे इति।** अत्र न लुट्, किंतु लृडेवेति भावः। **पञ्चदशरात्र इति।** पञ्चदश रात्रयो यस्य पक्षस्येति बहुव्रीहिः। 'अच्प्रत्यन्ववपूर्वात्' इत्यत्र अजिति योगविभागादच्समासान्तः। यद्वा पञ्चदशानां

---

म्ब्यास्तत्र सक्तून्पातास्मः। **कालविभागे च।** कालविभागः कालविशेषः। अनहोरात्राणामिति संबन्धषष्ठी। **पूर्वसूत्रमिति।** तदयमर्थः—मर्यादोक्तौ कालविशेषाद्यदवरं तस्मिन्प्रविभागे भविष्यत्यनद्यतनवन्न, स चेत्कालविभागः अहोरात्रसंबन्धी न चेदित्यर्थः। इह कालविभागे सत्यवरस्मिन्ननद्यतनवन्नेत्युक्ते कस्मादित्यपेक्षायामर्थात्कालविशेषादिति लभ्यत इत्येके। केचित्तु कालविभाग इति पञ्चम्यर्थे सप्तमीत्याहुः। **उत्तरार्थ इति।** 'परस्मिन्विभाषा' इति सूत्रे कालमर्यादाया एवानुवृत्तिर्यथा स्यात्। भविष्यतीति किम्, यः संवत्सरोऽतीतस्तस्य यदवरं मासात्तत्र पयोऽपिबाम। मर्यादायामिति किम्, यो निरवधिः समयस्तस्य यदवरं मासात्तत्र पयः पातास्मः। **पञ्चदशरात्र इति।** नन्वत्र 'संख्यापूर्वं रात्रम्–' इति क्लीबत्वेन भाव्यम्। न च पञ्चदश रात्रयो यस्मिन्पक्षे इति बहुव्रीह्याश्रयणात्पुँल्लिङ्गः सिद्ध इति वाच्यम्, 'अहःसर्वैकदेश–' इत्यच्प्रत्ययस्याभावप्रसङ्गादिति चेत्। सत्यम्। अत एव हि भाष्यप्रयोगात्क्लीबत्वं नेत्याहुः। **परस्मिन्।** 'भविष्यत्यनद्यतनवन्न' इति विक-

---

१ 'मास' इति क्वचित् पाठः।

विभाषा । ( ३-३-१३८ ) अवरास्मिन्वर्जं पूर्वसूत्रद्वयमनुवर्तते । अप्राप्त-विभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे, अध्येतास्महे । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' ( सू २२२१ )। भविष्यतीत्येव । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् । २७१७ भूते च । (३-३-१४०) पूर्वसूत्रं सम्पूर्णमनुवर्तते । २७१८ वोताप्योः । (३-३-१४१) वा आ उताप्योः इति छेदः । 'उताप्योः–' ( २८०१ ) इत्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते । पूर्वसूत्रं तु 'उताप्योः' इत्यादौ प्रवर्तते इति विवेकः । २७१९ गर्हायां लडपिजात्वोः । ( ३-३-१४२ ) आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम् । लुङादीन्परत्वादयं बाधते । अपि जायां त्यजसि,

---

रात्रीणां समाहारः पञ्चदशरात्रः । 'अहःसर्वैकदेश–' इत्यच्समासान्तः । 'संख्यापूर्वं रात्रं क्लीबम्' इति तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वचनान्न भवति । **परस्मिन्विभाषा । अनुवर्तते इति** । तथा च भविष्यति काले मर्यादोक्तौ परस्मिन् विभागे अनद्यतनवद्वेति फलितम्। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति व्याख्यातं भूधातुनिरूपणे । **भूते च** । अधिकारोऽयम् । **अनुवर्तते इति** । तथा च लिङ्निमित्ते लृङ् क्रियातिपत्तौ भूत इत्यधिक्रियते इति फलितमिति भावः । **वोताप्योः** । अयमप्यधिकारः । वा आ उताप्येरिति छेदः । भूते इति लिङ्निमित्ते लुङिति चानुवर्तते, तदाह **उताप्योरित्यतः प्रागिति** । उताप्योः समर्थयोरित्यतः प्रागित्यर्थः । नन्वनेन 'उताप्योः–' इत्यतः प्राग् भूते लिङ्निमित्ते लृङ्वेत्यधिकाराक्रान्तत्वाद् भूते चेति पूर्वमधिकारसूत्रं निर्विषयमित्यत आह **पूर्वसूत्रं त्विति** । 'उताप्योः समर्थयोर्लिङ्' इत्यारभ्य 'इच्छार्थेभ्यो विभाषा' इत्यतः प्राग् 'भूते च' इति पूर्वमधिकारसूत्रं प्रवर्तत इत्यर्थः । इमावधिकारौ यत्र लिङ्विधिस्तत्रैव प्रवर्तेते, न तु लडादिविधौ, लिङ्निमित्ताभावात् । **गर्हायाम्** । अपि जातु अनयोर्द्वन्द्वः । अत्र 'वोताप्योः–' इति भूते लिङ्निमित्ते लृङ् वा इत्यधिकारो न संबध्यते ।

---

त्पेन निषिध्यते । **वर्ज्यमिति** । णिजन्ताद् 'अचो यत्' इति कर्मणि यत् । वर्जमिति पाठे तु 'द्वितीयायां च' इति णमुल् । अनहोरात्राणामित्येव । योऽयं वत्सर आगामी तस्य यत्परं पञ्चदशरात्रात्तत्र पयः पातास्म इत्यादि । **लिङ्निमित्त इति** । अतिपत्तिरनिष्पत्तिः । **भूते च** । लिङ्निमित्ते लृङ् स्याद् भूते भविष्यति च क्रियातिपत्तौ । अद्यतनानद्यतनसाधारणं भूतसामान्यमिह ज्ञेयम् । अस्योदाहरणानि 'उताप्योः समर्थयोर्लिङ्' इत्यारभ्य 'समानकर्तृकेषु तुमुन्' इति विहाय सप्तसूत्र्यां बोध्यानि । ततः प्राचीनेषु 'वोताप्योः' इत्यनेन विकल्पोक्तेः । **लृङ् चेति** ।

जातु गणिकामाधत्से, गर्हितमेतत्। २८०० **विभाषा कथमि लिङ् च।** (३-३-१४३) गर्हायामित्येव। कालत्रये लिङ्, चाल्लट्। कथं धर्मं त्यजेः त्यजसि वा। पक्षे कालत्रये लकाराः। अत्र भविष्यति नित्यं लृङ्, भूते वा। कथं नाम तत्रभवान्धर्ममत्यक्ष्यत्। २८०१ **किंवृत्ते लिङ्लृटौ।** (३-३-१४४)

---

लड्विधानेन तद्विषये लिङ्निमित्ताभावात्। **कालत्रये इति।** वर्तमाने भूते भविष्यति चेत्यर्थः। भविष्यतीति निवृत्तम्। अतः कालसामान्ये लडिति भावः। **परत्वादिति।** अनवकाशत्वाच्चेत्यपि द्रष्टव्यम्। अपि जायामित्यत्र जातु गणिकामित्यत्र च अपिजातुशब्दौ निन्दाद्योतकौ, तदाह **गर्हितमेतदिति।** **विभाषा कथमि लिङ् च। गर्हायामित्येवेति।** अनुवर्तत एवेत्यर्थः। कालत्रये लिङिति शेषपूरणम्। भविष्यतीति निवृत्तमिति भावः। **चाल्लडिति।** समुच्चीयते इति शेषः। तथा च कथमित्यस्मिन् प्रयुज्यमाने कालत्रये गर्हार्थां लिङ्लटौ वा स्त इति फलितम्। **कथं धर्मं त्यजेरिति।** त्यक्तवान् त्यक्ष्यसि त्यजसि वेत्यर्थः। गर्हितमेतदिति कथंशब्दाद्गम्यते। लटि उदाहरति **त्यजसि वेति।** उक्तोऽर्थः। **पक्षे इति।** विभाषाग्रहणाल्लिङ्लटोरभावपक्षे भूते वर्तमाने भविष्यति च कालत्रये लिङ्लङ्लुङ्लङ्लुङ्लृट इत्यर्थः। **अत्रेति।** अत्र उक्तविषये भविष्यति काले क्रियाया अनिष्पत्तौ गम्यमानायां 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति नित्यमेव लृङ्, कथमो गर्हायाश्च लिङ्निमित्तस्य सत्त्वादित्यर्थः, विशेषविहितत्वादिति भावः। **भूते वेति।** 'वोताप्योः–' इति भूते लिङ्निमित्ते लृङ् वेति अधिकृतत्वादुक्तविषये भूतकाले लृङ् वेत्यर्थः। भविष्यति नित्यं लृङित्यत्रोदाहरति **कथं नामेति।** तत्रभवानिति समुदायः पूज्यवाची। वेदप्रामाण्याभ्युपगन्तेति यावत्। एवंविधः कथं धर्ममत्यक्ष्यत्, तत्त्यागस्य गर्हितत्वादिति भावः। **किंवृत्ते लिङ्-**

---

लिङ्निमित्ते भूत एवायं विकल्पः, भविष्यति तु नित्यमेव लृङ्। **गर्हायाम्।** अत्र 'वोताप्योः' इति न संबध्यते। वर्तमाने लडुक्तः कालत्रये तु न प्राप्नोतीति विधिरयम्। **कालत्रय इति।** कालविशेषानुपादानादिति भावः। **परत्वादिति।** निरवकाशत्वादित्यपि बोध्यम्। **अपि जायामिति।** त्यक्ष्यसि अत्याक्षीरित्यादिविषयेऽपि त्यजसीत्यादि लडेव प्रयुज्यत इति भावः। एवं यो जायां तत्याज अत्यजत् अत्याक्षीत् त्यक्ता त्यक्ष्यतीत्यादिविषयेऽपि यो जायामपि त्यजति जातु गणिकामाधत्ते इति लडेव कालत्रयलकारापवादतया प्रयोक्तव्यः। लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति। **कालत्रये लकारा इति।** परोक्षानद्यतनभूते लिट् कथं धर्मं तत्यक्थ। भूतानद्यतने लङ् कथं धर्ममत्यजः। भूतसामान्ये लुङ् अत्याक्षीः।

गर्हायामित्येव। विभाषा तु नानुवर्तते। कः कतरः कतमो वा हरिं निन्देत्, निन्दिष्यति वा। लृङ् प्राग्वत्। २८०२ **अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि।** (३-३-१४५) गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। न सम्भावयामि न मर्षये वा भवान्हरिं निन्देत्, निन्दिष्यति वा। कः कतरः कतमो वा हरिं निन्देत्, निन्दिष्यति वा। लृङ् प्राग्वत्। २८०३ **किंकिलास्त्यर्थेषु लृट्।** (३-३-१४६) अनवक्लृप्त्यमर्षयोरित्येतद् 'गर्हायां च' (सू २८०६) इति यावदनुवर्तते। किंकिलेति समुदायः क्रोधद्योतक उपपदम्। अस्त्यर्था अस्तिभवतिविद्यतयः। लिङोऽपवादः। न श्रद्दधे न मर्षये वा किंकिल

---

लृटौ। **नानुवर्तते इति**। व्याख्यानादिति भावः। विभक्त्यन्तं डतरडतमान्तं च किंशब्दनिष्पन्नं किंवृत्तमित्युक्तम्। तस्मिन्प्रयुज्यमाने गर्हायां लिङ्लृटौ स्त इत्यर्थः। सर्वलकाराणामपवादाविति वृत्तिः। **लृङ् प्राग्वदिति**। भविष्यति नित्यं लृङ्, भूते वेति प्रागुक्तमिहाप्यनुसंधेयमित्यर्थः। लिङ्निमित्तस्य किंवृत्तस्य गर्हायाश्च सत्त्वादिति भावः। **अनवक्लृप्त्यमर्ष। निवृत्तमिति**। व्याख्यानादिति भावः। अनवक्लृप्त्यमर्षयोः लिङ्लृटोश्च यथासंख्यं नेष्यते, अल्पाच्तरस्य अमर्षशब्दस्य पूर्वनिपातत्यागादिति वृत्तिः। **न सम्भावयामीति**। अकिंवृत्ते उदाहरणम्। भवान् हरिं निन्देदिति यत् तत् न संभावयानि न मर्षये वेत्यन्वयः। किंवृत्ते उदाहरति **कः कतर इति। लृङ् प्राग्वदिति**। भविष्यति नित्यं लृङ् भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः। **किंकिल**। किंकिलेति समुदायस्य अस्त्यर्थानां च द्वन्द्वः। **यावदिति**। 'गर्हायां च' इत्यतः प्रागित्यर्थः। किंकिलेत्यस्मिन् अस्त्यर्थेषु च प्रयुज्यमानेषु अनवक्लृप्त्यमर्षयोर्लृट् स्यादित्यर्थः। पूर्वसूत्रेण लृङ्लृटोः प्राप्तौ लृडेवेत्यर्थमिदम्, तदाह **लिङोऽपवाद इति। न श्रद्दधे**

---

भविष्यत्यनद्यतने लुट् त्यक्तासि। भविष्यत्सामान्ये लृट् कथं धर्मं त्यक्ष्यसीत्यादि। **अत्रेति**। क्रियातिपत्ताविति ज्ञेयम्। **किंवृत्ते**। लिङ्लृटौ कालत्रये स्तः। **नानुवर्तत इति**। एवं चास्मिन्विषये निन्दति निन्दिष्यत्यनिन्ददिति कालत्रये लकाराः पक्षे न भवन्तीति भावः। **प्राग्वदिति**। क्रियातिपत्तौ भविष्यति नित्यं लृङ्। भूते वेत्यर्थः। **अनवक्लृप्त्यमर्षयोः**। लिङ्लृटावनुवर्तेते तौ च कालत्रये भवतस्तेन सर्वलकाराणामपवादौ। किंवृत्तस्यानधिकारादेवाविशेषादुभयोर्भविष्यतीत्यकिंवृत्तेऽपीति न कर्तव्यम्। पूर्वनिपातार्हस्याल्पाचः परनिपातो यथासंख्यनिवृत्त्यर्थः। **लृङ् प्राग्वदिति**। भूते वा भविष्यति नित्यमित्यर्थः। नाहं भावयामि चैत्रो हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम्। **किंकिलास्त्यर्थेषु**। लिङ्लृटोः प्राप्तयोरिह लृड्ग्रहणा-

त्वं शूद्रान्नं भोक्ष्यसे। अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि। अत्र लृङ् न। २८०४ **जातुयदोर्लिङ्** । ( ३-३-१४७ ) लृटोऽपवादः। 'यदायद्योरुपसंख्यानम्' ( वा २२७५ ) । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि। लृङ् प्राग्वत्। २८०५ **यच्चयत्रयोः** । ( ३-३-१४८ ) यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षयामि। २८०६ **गर्हायां च** ।

---

**इति** । न संभावयामीत्यर्थः। त्वं शूद्रान्नं भोक्ष्यसे इति यत् तत् न श्रद्दधे न मर्षये वा किंकिलेत्यन्वयः। किंकिलेति क्रोधं द्योतयति। **अस्तीति** । शूद्रस्य स्त्री शूद्री। तां गमिष्यसीत्यस्ति भवति विद्यते वेत्यन्वयः। **अत्र लृङ् नेति** । भविष्यति नित्यं लृङ्, भूते वेत्युक्तमिह न संभवति, अत्र लिङो विध्यभावेन लिङ्निमित्तविरहात्। **जातुयदोर्लिङ्** । जातु यद् अनयोः प्रयोगे अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः। यदिति विभक्तिप्रतिरूपकमव्ययम्। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीति लिङ्लृटौ प्राप्तौ लिङेवेत्यर्थमिदम्, तदाह **लृटोऽपवाद इति** । **यदायद्योरिति** । यदायद्योः प्रयोगेऽपि उक्तविषये लिङ उपसंख्यानमित्यर्थः। जात्वादिशब्दा उदाहरणे अनवक्लृप्त्यमर्षद्योतकाः। त्वादृशो हरिं निन्देदित्येतद् नावकल्पयामि न मर्षयामि वेत्यन्वयः। नावकल्पयामीत्यस्य न संभावयामीत्यर्थः। **लृङ् प्राग्वदिति** । भविष्यति नित्यं लृङ् भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः, जात्वादियोगस्य अनवक्लृप्त्यमर्षयोश्च लिङ्निमित्तत्वादिति भावः। **यच्चयत्रयोः** । यच्चेति समुदाये यत्रशब्दे च प्रयुज्यमाने अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः। लृटोऽपवादः। योगविभागस्तु उत्तरसूत्रे अनयोरेवानुवृत्त्यर्थः। उदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ। त्वमेवं कुर्या इत्येतद् न श्रद्दधे न मर्षयामि

---

क्लिङ् निवर्तत इत्याशयेनाह **लिङोऽपवाद इति** । **अस्ति भवतीति** । त्वत्कर्तृकं शूद्रागमनमस्तीत्यादिरर्थः। **लृङ् नेति** । लिङो निवृत्तत्वेन तन्निमित्तत्वाभावात्। **जातुयदोर्लिङ्** । अनवक्लृप्त्यमर्षयोरिति वर्तते। तथा च 'अनवक्लृप्त्यमर्षयोः' इति लिङ्लृटोः प्राप्तयोर्वचनमिदं लृटो बाधनार्थम्, तदाह **लृटोऽपवाद इति** । अयं कालत्रये। **लृङ् प्राग्वदिति** । क्रियातिपत्तौ भूते वा भविष्यति नित्यमित्यर्थः। जातु भवान् हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम्। अगर्हार्थमिदम्। गर्हायां तु जातुयोगे लड्उक्तः। **यच्चयत्रयोः** । 'अनवक्लृप्त्यमर्षयोः' इति वर्तते। यथासंख्यमिह नेष्यते। अयमपि लिङ्लृटोरपवादः। योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवानुवृत्तिर्यथा स्यादित्येतदर्थः। क्रियातिपत्तौ लृङ् प्राग्वत्। यच्च यत्र वा त्वमेवमकरिष्यो न श्रद्दधे न मर्षयामीत्यादि। **गर्हायां च** । कालत्रयेऽयं भवतीति सर्वलकारापवादः।

( ३-३-१४९ ) अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् । यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यं तत् । २८०७ चित्रीकरणे च । ( ३-३-१५० ) यच्च यत्र वा त्वं शूद्रं याजयेः आश्चर्यमेतत् । २८०८ शेषे लृडयदौ । ( ३-३-१५१ ) यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अयदौ किम्-आश्चर्यं यदि मूकोऽधीयीत । २८०९ उताप्योः समर्थयोर्लिङ् । ( ३-३-१५२ ) बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः । समर्थयोः किम्-उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नः प्रच्छादनं च गम्यते । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो

---

वेत्यन्वयः । अत्रापि भविष्यति नित्यं लृङ्, भूते वेत्युक्तमनुसंधेयम्, लिङ्निमित्तस्य सत्त्वात् । **गर्हायां च । निवृत्तमिति ।** व्याख्यानादिति भावः । 'यच्चयत्रयोः' इति लिङिति चानुवर्तते, तदाह **यच्चयत्रयोर्योगे इति । लिङेवेति ।** न तु लकारान्तरमित्यर्थः । उदाहरणे यच्चेति यत्रेति च गर्हाद्योतकम् । त्वं शूद्रं याजयेरिति यत् तदन्याय्यमित्यन्वयः । लृङ् प्राग्वत् । **चित्रीकरणे च ।** यच्चयत्रयोः प्रयोगे आश्चर्ये गम्ये लिङेव स्यात्, न तु लकारान्तरमित्यर्थः । उदाहरणे यच्चेति यत्रेति चाश्चर्यद्योतकम् । त्वं शूद्रं याजयेरिति यत् तदाश्चर्यमित्यन्वयः । **शेषे लृडयदौ ।** यच्चयत्राभ्यामन्यः शेषः, तदाह **यच्चयत्राभ्यामन्यस्मिन्निति ।** यदिभिन्ने इति शेषः । **लृट् स्यादिति ।** न तु लकारान्तरमित्यर्थः । **आश्चर्यमिति ।** अन्धः कृष्णं द्रक्ष्यतीत्याश्चर्यमित्यन्वयः । नामेत्यव्ययमाश्चर्यद्योतकम् । **मूक इति ।** मूकोऽधीयीत इत्याश्चर्यमित्यन्वयः । यदीत्यश्चर्यद्योतकम् । **उताप्योः ।** समौ अर्थौ ययोरिति विग्रहः । शकन्ध्वादित्वात्पररूपम् । एकार्थकयोरित्यर्थः । कमर्थमादायानयोरेकार्थकत्वमित्यत आह **बाढमिति ।** तथा च बाढार्थकयोः उत अपि इत्यनयोः प्रयोगे लिङ् स्यान्न तु लकारान्तरमित्यर्थः ।

---

**लिङेव स्यादिति ।** गर्हायां 'विभाषा कथमि-' इति लट् प्राप्तस्तत्रैव 'किंवृत्ते-' इति लृट् प्राप्तस्तयोरपवादो यच्चयत्रयोर्योगे विहितोऽयं लिङिति भावः । लृङ् प्राग्वत् । यच्च यत्र वा त्वं शूद्रमयाजयिष्यस्तदन्याय्यमित्यादि । **चित्रीकरणे च ।** अयमपि कालत्रये लृङ् प्राग्वत् । यच्च यत्र वा त्वं शूद्रमयाजयिष्य आश्चर्यमेतत् । **शेषे ।** सर्वलकारापवादः । **सोऽधीयीतेति ।** यदाद्ययोरुपसंख्यानाद् 'जातुयदोः-' इति लिङ् । लिङ्निमित्ताभावादिह लृङ् न । **उताप्योः ।** धातोर्लिङ् स्यात्कालत्रये । **भूतेऽपि नित्य इति ।** वाग्रहणस्य निवृत्तत्वाद् भविष्यतीव भूतेऽपि नित्यं लृङ् ।

लृङ्। २८१० कामप्रवेदनेऽकच्चिति। ( ३-३-१५३ ) स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति। कामो मे भुञ्जीत भवान्। अकच्चितीति किम्-कच्चिज्जीवति। २८११ सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे। ( ३-३-१५४ ) अलमर्थोऽत्र प्रौढिः। सम्भावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते। सम्भावनेऽर्थे लिङ् स्यात्, तच्चेत्सम्भावनमलमिति

---

**उत अपि वेति**। उत हन्यादघं हरिः, अपि हन्यादघं हरिरित्यन्वयः। उतापी बाढमित्यर्थकौ। **गम्यते इति**। उत दण्डः पतिष्यतीत्यत्र उतशब्देन प्रश्नो गम्यते। अपिधास्यति द्वारमित्यत्र अपिना धाधातोः प्रच्छादनार्थकत्वं गम्यत इत्यर्थः। **इतः प्रभृतीति**। 'वोताप्योः' इति मर्यादायामाङ्। 'उताप्योः' इत्यतः प्राग् भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते। 'उताप्योः-' इत्यादिसूत्रेषु भूते 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्येवाधिक्रियते इत्युक्तम्। एवं च 'उताप्योः-' इति सूत्रप्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूते लृङित्येवाधिक्रियते, न तु वाग्रहणम्। अतो नित्यमेवात्र विषये क्रियातिपत्तौ भूते भविष्यति च लृङित्यर्थः। **कामप्रवेदनेऽकच्चिति**। अकच्चितीति च्छेदः, तदाह **न तु कच्चितीति**। सर्वलकारापवादः। अभिप्राय इच्छा। **काम इति**। भवान् भुञ्जीतेति मे कामः, इच्छेत्यर्थः। अत्र लिङ्निमित्तस्य सत्त्वात् क्रियातिपत्तौ भूतेऽपि नित्यं लिङ्। प्रश्न एवायं कामप्रवेदनद्योतक इति प्राप्तिः। अत्र कच्चिच्छब्दस्य इच्छार्थकत्वाभावादिच्छार्थेष्विति वक्ष्यमाणं नात्र प्रवर्तते। **संभावने। अलमर्थोऽत्र प्रौढिरिति**। पर्याप्तिरित्यर्थः। **विपरिणम्यते इति**। संभावने इति यत् सप्तम्यन्तं तद् आवर्त्य प्रथमया संभावनमिति च विपरिणम्यते। यत्तु अलम् इति प्रथमान्तं तद् आवर्त्य सप्तम्या अलमि इति च विपरिणम्यत इत्यर्थः। छान्दसं विभक्तिव्यत्ययमाश्रित्येति शेषः। तथा च संभावने इति सप्तम्यन्तं संभावनमिति प्रथमान्तं च लभ्यते। तथा अलम् इति प्रथमान्तम् अलमि इति सप्तम्यन्तं च लभ्यते। तत्र संभावने इति सप्तम्यन्तमर्थनिर्देशपरम्, तदाह **संभावनेऽर्थे लिङ् स्यादिति**। उत्कटान्यतरकोटिकं

---

उताहनिष्यद्दस्युं राजा। नाहन् न हनिष्यतीति गम्यते। **कामप्रवेदने। लिङ् स्यादिति**। कालत्रये सर्वलकारापवादः। **कच्चिज्जीवतीति**। कामो मे इत्यनुषञ्जनीयम्। 'वर्तमानसामीप्ये-' इति लट्। **संभावनेऽल। प्रौढिरिति**। पर्याप्तिरित्यर्थः। **प्रथमया सप्तम्या चेति**। संभावने इति सप्तम्यन्तं प्रथमया विपरिणम्यते। अलमिति प्रथमान्तं सप्तम्येति संबन्धः। **संभावनेऽर्थे इति**। ननु प्रथमया विपरिणमितत्वात्कथमत्र सप्तम्यर्थलाभ इति चेत्। अत्राहुः—संभावनेऽलमि-

सिद्धाप्रयोगे सति । अपि गिरिं शिरसा भिन्द्यात् । सिद्धाप्रयोगे किम्-अलं कृष्णो हस्तिनं हनिष्यति । २८१२ **विभाषा धातौ सम्भावनवचनेऽयदि** । ( ३-३-१५५ ) पूर्वसूत्रमनुवर्तते । संभावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे । पूर्वेण नित्यं प्राप्ते वचनम् । सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान् । अयदि किम्-सम्भावयामि यद् भुञ्जीथास्त्वम् । २८१३ **हेतुहेतुमतोर्लिङ्** । ( ३-३-१५६ ) वा स्यात् । कृष्णं नमेच्चेत्सुखं

---

ज्ञानं संभावनमित्युच्यते । संभावनमिति प्रथमान्तं तु अलमिति प्रथमान्तेन विशेष्यते । इतिर्हेतौ, तदाह **तच्चेदिति** । तत्संभावनम् अलं पर्याप्तिहेतुकं चेदित्यन्वयः । षिधधातोर्ज्ञानार्थकाद् 'मतिबुद्धि-' इति वर्तमाने कर्मणि क्ते सिद्धशब्दः । सिद्धे गम्यमानेऽप्यलमर्थे अप्रयोगो यस्य स सिद्धाप्रयोगः, तस्मिन्निति विग्रहः । अलमिति सप्तम्यन्तमत्र विशेष्यसमर्पकं संबध्यते । अलंशब्दप्रयोगं विनापि तदर्थे गम्यमाने इति यावत्, तदाह **सिद्धाप्रयोगे सतीति** । अलमिति शेषः । **अपि गिरिम्मिति** । बलवन्तं पुरुषमधिकृत्य अत्युक्तिरियम् । प्रायेण शिरसा गिरिं भेत्तुमयं समर्थ इत्यर्थः । गिरिभेदसंभावनस्य सामर्थ्यहेतुकत्वद्योतकः अपिशब्दः । अत्र लिङ्निमित्तसत्त्वात् क्रियातिपत्तौ भूते लृङ् । 'अलमिति संभावने सिद्धाप्रयोगश्चेत्' इति सुवचम् । **विभाषा धातौ** । अयदीति छेदः, तदाह **न तु यदिति** । लिङभावे लृट्, 'शेषे लडयदौ' इत्यतस्तदनुवृत्तेः । **संभावयामीति** । प्रायेण भोक्तुं समर्थ इत्यर्थः । **हेतुहेतुमतोर्लिङ्** । पूर्वसूत्राद्विभाषानुवृत्तिं मत्वाह **वा स्यादिति** ।

---

त्यावर्त्ये द्वितीयस्यैव विपरिणामात्सर्वेष्टसिद्धिरिति । संभावनं क्रियासु योग्यताध्यवसायः । **अलमितीति** । तच्च संभावनं समर्थ इति चेद् भवति तदा लिङ् स्यादित्यर्थः । **सिद्धेति** । सिद्धः अप्रयोगो यस्य तस्मिन्नलमि सति । यत्रालंशब्दो न प्रयुज्यते तदर्थस्तु गम्यते तत्रेति फलितोऽर्थः । मनोरमायां तु 'अलमिति संभावने सिद्धाप्रयोगश्चेत्' इति सूत्रयितुमुचितमित्युक्तम् । तत्र सिद्धस्याप्रयोग इति विग्रहः । कस्याप्रयोग इत्याकाङ्क्षायामर्थादलंशब्दस्येति बोध्यम् । **अपि गिरिमिति** । संभावनाद्योतकोऽपिशब्दो गिरिविदारणे पर्याप्त इति संभवनात्र गम्यते । कालसामान्येऽयं लिङ् । लृङ् प्राग्वत् । अपि गिरिं शिरसाऽभेत्स्यत् । अलमिति चेत् किम्, प्रायेण गमिष्यति । **विभाषा धातौ** । संभावनमुच्यते येन तत्संभावनवचनं तस्मिन्धातौ । संभावनार्थकधातावित्यर्थः । **भुञ्जीथास्त्वमिति** । अत्र पूर्वेण नित्यो लिङ् । धातौ किम्, संभावनवचने स्वरूपग्रहणं माभूत् । कृते तु संभावनवचने तद्वाचकधातोरप्रयोगादिह विभाषा न भवति । भुञ्जीत भवान् । पूर्वेणात्र नित्यो लिङ् । **हेतुहेतु** ।

यायात् । कृष्णं नंस्यति चेत् सुखं यास्यति । 'भविष्यत्येवेष्यते' ( वा २२७५ ) नेह–हन्तीति पलायते । २८१४ इच्छार्थेषु लिङ्लोटौ । ( ३-३-१५७ ) इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थये इत्यादियोगे बोध्यम् । 'कामप्रवेदने इति वक्तव्यम्' ( वा २२७६ ) । नेह–इच्छन्करोति ।

---

पक्षे लृट् । हेतुभूते फलभूते वाऽर्थे वर्तमानद्धातोर्लिङ् वा स्यादिति यावत् । **भविष्यत्येवेति** । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः । **हन्तीतीति** । इतिर्हेतौ वर्तमानकालिकहननाद्धेतोरित्यर्थः । अत्र लिङ्निमित्तसत्त्वाद् भविष्यति तु क्रियातिपत्तौ भूते च लृङ् । **इच्छार्थेषु लिङ्लोटौ** । इच्छार्थकधातुषु प्रयुज्यमानेषु लिङ्लोटौ स्तः । सर्वलकारापवादः । असमानकर्तृकविषयमिदम् । समानकर्तृकेषु तु 'लिङ् च' इति वक्ष्यते । **इच्छामीति** । भुञ्जीत भवानिति इच्छामीत्यन्वयः । **कामप्रवेदने इति** । परं प्रति स्वाभिप्रायाविष्करणे 'इच्छार्थेषु लिङ्लिटौ' इति विधिरित्यर्थः । **इच्छन् करोतीति** । परं प्रति स्वाभिप्रायाविष्करणाभावान्न लिङ्लोटाविति भावः ।

---

विभाषेत्यस्यानुवर्तनादाह **वा स्यादिति** । **नमेच्चेदिति** । कृष्णनतिः सुखप्राप्तौ हेतुः । **भविष्यत्येवेति** । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थमिति भावः । **हन्तीत्यादि** । ननु 'लक्षणहेत्वोः क्रियायाः' इति हन्तेः शतृप्रत्ययः स्याद् हननस्य पलायने हेतुत्वात् । मैवम् । 'देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः' इति 'शाच्छोरन्यतरस्याम्' इति सूत्रे भाष्ये व्यवस्थापितत्वात् । व्याख्यातं च कैयटेन तत्रैव सूत्रे देवत्रात इति संज्ञा । तत्र 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति न णत्वं भवति देवत्राण इति । किं तु देवत्रात इत्येव । 'ग्रो यङि' 'अचि विभाषा' इति प्राण्यङ्गे नित्यं लत्वम् । गलः । विषवाचके गर इत्यत्र न भवति । 'विभाषा ग्रहः' इति णप्रत्ययो जलचरे भवति, ग्राहः ज्योतिषि न, ग्रहः । 'लक्षणहेत्वोः–' इति सूत्रे 'नन्वोर्विभाषा' इत्यतो विभाषेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादितिशब्दयोगे सद्विधिः शतृशानचौ न भवतः । हन्तीति पलायते । वातायने गवाक्षः । अन्यत्र त्ववङ् न भवति, गोक्षः । संशितव्रत इति बहुव्रीहिः । अत्र 'शाच्छोरन्यतरस्याम्' इति संशात इतीत्वविकल्पो न भवति । अन्यत्र तु शातः, शितः । ते पूर्वोक्तनत्वादिविधयो मिथः परस्परम् एकविषये न विकल्प्यन्ते, तत्तद्विधायकसूत्रे व्यवस्थितविभाषाश्रयणादिति भावः । क्रियातिपत्तौ तु भूते भविष्यति च नित्यं लृङ् । यद्यवर्षिष्यत् सस्यमुदपत्स्यत । **इच्छार्थेषु लिङ्लोटौ** । एषूपपदेषु धातोरेतौ स्तः । सर्वलकाराणामपवादः । 'लिङ् च' इत्यनेन समानकर्तृकेषु लिङो विधानादिह लिङ्लोटावसमानकर्तृकेषु भवत इति बोध्यम् । **इच्छन् करोतीति** । अत्रानभिधानात् 'समानकर्तृकेषु–' इति तुमुन्

२८१५ लिङ् च । ( ३-३-१५९ ) समानकर्तृकेषु इच्छार्थेषु लिङ् । भुञ्जीयेतीच्छति । २८१६ इच्छार्थेभ्यो विभाषा वर्तमाने । ( ३-३-१६० ) लिङ् स्यात्पक्षे लट् । इच्छेत् । इच्छति । कामयेत । कामयते । 'विधिनिमन्त्रण-' ( सू २२०८ ) इति लिङ् । विधौ यजेत । निमन्त्रणे इह भुञ्जीत भवान् । आमन्त्रणे इहासीत । अधीष्टे पुत्रमध्यापयेद्भवान् । संप्रश्ने किं भो वेदमधीयीय उत तर्कम् । प्रार्थने भो भोजनं लभेय । एवं लोट् । २८१७ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । ( ३-३-१६३ ) लोट् च । प्रैषो विधिः ।

---

'कामप्रवेदनेऽकच्चिति' इति सूत्रं तु प्रकरणादिना यत्र कामप्रवेदनम्, नत्विच्छार्थकमुपपदमस्ति तद्विषयमिति बोध्यम् । इत उत्तरसूत्रं 'समानकर्तृकेषु तुमुन्' इति तु कृदधिकारे व्याख्यास्यते । **लिङ् च** । समानकर्तृकेष्विति इच्छार्थेष्विति चानुवर्तते, तदाह **समानेत्यादि** । **भुञ्जीयेतीच्छतीति** । अत्र भोक्तुरेव इषिकर्तृत्वात्समानकर्तृकत्वम् । समानकर्तृकेषु इच्छार्थेष्विति लोटो निवृत्त्यर्थमिदं सूत्रम् । क्रियातिपत्तौ तु भविष्यति नित्यं लृङ्, भूते चेत्यधिकारः संपूर्णः । **इच्छार्थेभ्यो** । लिङित्येवानुवर्तते । समानकर्तृकेष्विति तु निवृत्तम् । तत् सूचयन्नुदाहरति **इच्छेत्, इच्छतीति** । 'विधिनिमन्त्रण-' इति भूधातौ व्याख्यातमपि सूत्रक्रमप्राप्तत्वात् स्मारितम् । **एवं लोडिति** । लोट् चेति विध्यादिषु विहितो लोडप्येवमुदाहर्तव्य इत्यर्थः । **प्रैषातिसर्ग** । **लोट् चेति** । पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते । कृत्यसंज्ञकाः प्रत्यया वक्ष्यमाणा लोट् च प्रैषादिषु भवन्तीत्यर्थः । प्रैषे अतिसर्गे च कृत्यप्रत्ययमु-

---

न । ननु 'कामप्रवेदनेऽकच्चिति' इत्यनेनैव लिङः सिद्धत्वादिह लिङ्ग्रहणं मास्तु लोडेव विधीयतामिति चेन्न । लोटा लिङो बाधा माभूदिति लिङ्ग्रहणस्यात्रावश्यकत्वात् । न चैवम् 'इच्छार्थेषु लोट् च' इत्येव सूत्र्यतामिति वाच्यम्, चकारेण लिङोऽनुकर्षे तत्संबद्धस्य विभाषाग्रहणस्यानुकर्षणप्रसक्त्या लकारान्तरमपि स्यादिति । न चैवमपि कामप्रवेदन इत्युपसंख्यानादनेनैव सिद्धे 'कामप्रवेदनेऽकच्चिति' इति सूत्रं मास्त्विति वाच्यम्, यत्रार्थप्रकरणादिना कामप्रवेदनं गम्यते इच्छार्थकमुपपदं नास्ति तदर्थं तदारम्भात् । **लिङ् च** । 'समानकर्तृकेषु तुमुन्' इत्यनेन 'इच्छार्थेषु लिङ्लोटौ' इति विहितयोर्लिङ्लोटोर्बाधे प्राप्ते लिङः प्रतिप्रसवार्थं सूत्रम् । न चात्र वासरूपविधिना लिङ्लोटोर्नित्यं बाधा नेति शङ्क्यम्, क्तल्युट्तुमुन्खलर्थेषु तदभावात् । अथापि वासरूपविधिः स्यात् । एवमपि लिङेव यथा स्याल्लोड् माभूदित्येवमर्थं तदारब्धव्यमेव । क्रियातिपत्तौ लृङ् प्राग्वत् । **इच्छार्थेभ्यः** । इच्छार्थेभ्यः किम्, पचति गच्छति । **प्रैषातिसर्ग** । **प्रैषो विधिरिति** । विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैश-

अतिसर्गः कामचारानुज्ञा। भवता यष्टव्यम्। भवान्यजताम्। चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम्। २८१८ लिङ् चोर्ध्वमौहूर्तिके। (३-३-१६४) प्रैषादयोऽनुवर्तन्ते। मुहूर्तादूर्ध्वं यजेत यजताम् यष्टव्यम्। २८१९ स्मे लोट्। (३-३-१६५) पूर्वसूत्रस्य विषये। लिङः कृत्यानां चापवादः। ऊर्ध्वं मुहूर्ताद्यजतां स्म। २८२० अधीष्टे च। (३-३-१६६) स्मे उपपदेऽधीष्टे लोट् स्यात्। त्वं स्माध्यापय। २८२१ लिङ् यदि। (३-३-१६८) यच्छब्दे

---

दाहरति भवता यष्टव्यमिति। भावे तव्यप्रत्ययः। लोटमुदाहरति भवान् यजतामिति। ननु चकारेण लोटोऽनुकर्षणं व्यर्थम्, प्रैषस्य विधिरूपतया अतिसर्गस्य आमन्त्रणरूपतया च 'लोट् च' इत्यनेनैव सिद्धेरित्यत आह चकारेणेति। प्राप्तकाले यथा, गुरुणा भोक्तव्यम्। गुरुर्भुञ्जीत। भोजनं प्राप्तावसरमित्यर्थः। प्राप्तकाले च कृत्याश्च, इत्युक्तौ तु निमन्त्रणादिष्वपि कृत्याः स्युः। अतः प्रैषादिग्रहणम्। लिङ् चोर्ध्वमौहूर्तिके। 'लोडर्थलक्षणे च' इत्युत्तरमेवंजातीयकमेव सूत्रं लिङ्लङ्लुङ्लृङ्विधायकं प्राक् पठितम्। तत्र ऊर्ध्वमौहूर्तिकशब्दो व्याख्यातः। प्रैषादय इति। तथा च मुहूर्तादुपरितनकालके धात्वर्थे विद्यमानाद्धातोः प्रैषातिसर्गप्राप्तकालेषु लिङ् च स्याद् लोट् कृत्याश्चेत्यर्थः। क्रमेण लिङादीनुदाहरति मुहूर्तादूर्ध्वं यजेत यजतां यष्टव्यमिति। अत्र प्राप्तकाले अप्राप्तस्य लिङो विधिः, विध्यादिसूत्रे लिङ्विधौ प्राप्तकालस्य ग्रहणाभावात्। प्रैषातिसर्गयोस्तु विध्यादिसूत्रेणैव लिङ् सिध्यति। लिङ एवात्र विधौ तु, तेन लोटः कृत्यानां च बाधः स्यात्। अतश्चकारेण तेषामपि विधिरिति ज्ञेयम्। स्मे लोट्। पूर्वसूत्रेति। तथा च मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकालेषु लोडेव स्यात्, न तु लिङ् कृत्याश्चेत्यर्थः, तदाह लिङः कृत्यानां चापवाद इति। अधीष्टे च। लोट् स्यादिति। अधीष्टे विहितस्य लिङोऽपवादः। अधीष्टं सत्कारपूर्वको व्यापार इत्युक्तम्। त्वं स्माध्यापयेति गुरुं प्रत्युक्तिः। 'स्मे लोडधीष्टे च' इत्येकसूत्रत्वेन सिद्धे

---

चार्थमित्याहुः। लोटोऽनुकर्षणमिति। 'लोट् च' इति योगस्येदमेव प्रयोजनम्, एकयोगत्वे तु लिङोऽप्यनुकर्षणं स्यात्। प्राप्तकालार्थमिति। प्रैषातिसर्गयोः पूर्वेणैव सिद्धत्वादिति भावः। लिङ् चोर्ध्वं। प्राप्तकालविशेषेऽप्राप्तस्य लिङो विधानार्थमिदं सूत्रम्। प्रैषातिसर्गयोस्तु पूर्वेण प्राप्त एव लिङ्। लोट् कृत्यानां कालविशेषेऽस्मिन् लिङा बाधा माभूदिति चकारः। पूर्वसूत्रस्य विषय इति। प्रैषादय ऊर्ध्वमौहूर्तिके इति चानुवर्तत इति भावः। अधीष्टे च। लिङोऽपवादः। योगविभागस्तु ऊर्ध्वमौहूर्तिकाननुवृत्त्यर्थः। लिङ् यदि। कालसमयवेलासु चेति

उपपदे कालसमयवेलासु च लिङ् स्यात्। कालः समयो वेला वा यद् भुञ्जीत भवान्। २८२२ अर्हे कृत्यतृचश्च। (३-३-१६९) चाल्लिङ्। त्वं कन्यां वहेः। २८२३ शकि लिङ् च। (३-३-१७२) शक्तौ लिङ् स्यात्। चात्कृत्याः। भारं त्वं वहेः। 'माङि लुङ्' (सू २२११)। मा कार्षीः। कथं मा भवतु, मा भविष्यतीति? नायं माङ् किं तु माशब्दः। २८२४ धातुसंबन्धे प्रत्ययाः। (३-४-१) धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि

---

योगविभागस्तु ऊर्ध्वमौहूर्तिक इत्यनुवृत्तिनिवृत्त्यर्थः। 'कालसमयवेलासु तुमुन्' इत्युत्तरसूत्रं तु कृदधिकारे व्याख्यास्यते। **लिङ् यदि**। कालसमयवेलास्वित्यनुवर्तते। सर्वलकारापवादः। तुमुनपवादश्च। भुञ्जीत भवानिति यत् तस्य कालः समयो वेला वेत्यन्वयः। **अर्हे कृत्यतृचश्च। चाल्लिङिति**। योग्ये कर्तरि गम्ये कृत्याः तृच् लिङ् चेत्यर्थः। **त्वं कन्यां वहेरिति**। कन्याविवाहस्य योग्य इत्यर्थः। **शकि लिङ् च**। शक् इति भावे क्विबन्तम्। शक्तौ गम्यमानायामित्यर्थः। **भारं त्वं वहेरिति**। वोढुं शक्त इत्यर्थः। माङि लुङिति व्याख्यातमपि क्रमप्राप्तं विशेषविवक्षया पुनः स्मार्यते। ननु सर्वलकारापवादोऽयमित्युक्तम्। एवं सति मा भवतु मा भविष्यतीति कथमिति शङ्कते **कथमिति**। परिहरति **नायं माङिति**। **किंत्विति**। ङकारानुबन्धविनिर्मुक्तस्यापि अव्ययेषु पाठादिति भावः। न च माशब्दमादाय मा भवत्वित्यादिप्रयोगसत्त्वे 'माङि लुङ्' इति व्यर्थमिति वाच्यम्, सर्वलकारविषये 'न माङ्योगे' इत्यडाड्रहितलुङन्तप्रयोगार्थं तदावश्यकत्वात्। **धातुसंबन्धे**। धातुशब्देन धात्वर्थो लक्ष्यते। धात्वोः संबन्ध इति विग्रहः,

---

उपपदेष्विति वचनविपरिणामेन संबध्यते। तुमुनोऽपवादः। **यद्भुञ्जीतेति**। यत्कालः पचतीत्यत्र तु न, प्रैषादीनामनुवृत्तेः। **अर्हे**। योग्ये कर्तरि गम्यमाने कृत्यतृचो भवन्ति। त्वया कन्या वोढव्या। वहनीया। त्वं कन्यां वोढा। **कन्यां वहेरिति**। कन्योद्वहने योग्यस्त्वमित्यर्थः। नन्वर्हे किमर्थं कृत्यतृचो विधीयन्ते। यावता सामान्येन विहितत्वादनर्हेऽपि भविष्यन्तीति चेत्। अत्राहुः—अर्हतायां द्योत्यायामप्राप्तो लिङ् विधीयते, तेन तु लिङा बाधा माभूदिति कृत्यतृचोर्विधानम्। न च वासरूपविधिना समीहितसिद्धिः। स्त्र्यधिकारादूर्ध्वं तदप्रवृत्तेरिति। **धातुसंबन्धे**। इह धात्वोर्विशेषणविशेष्यभावादिसंबन्धोऽनुपपन्नः, स्वार्थस्मारणेनोपक्षीणत्वात्। पदार्थसंसर्गो वाक्यार्थः, कारकविशिष्टा क्रिया चेति स्वीकारात् शब्दानुगमादृते न शाब्दोऽस्ति प्रत्यय इत्यवष्टभ्य शाब्दबोधे शब्दोऽपि भासते इत्यभ्युपगमेऽपि शब्दस्य स्वार्थं प्रत्येव प्रकारत्वं न तु शब्दान्तरं प्रति। तथा च धातुसंबन्धो वाक्येन न बुध्यते

स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः

---

संबन्धस्य द्विनिष्ठत्वात् । तथा च धात्वर्थयोः संबन्धे सति प्रत्ययाः स्युरिति लब्धम् । कस्मिन्नर्थे इत्याकाङ्क्षायां काले इति गम्यते, 'वर्तमाने लट्' इत्यारभ्य तत्तत्कालविशेषेष्वेव प्रत्ययविधिदर्शनात् । तत्र तत्तद्विधिभिरेव तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन्काले इति गम्यते, तदाह **धात्वर्थानामित्यादिना** । धात्वर्थयोरित्यर्थः । उदाहरणबहुत्वाभिप्रायं बहुवचनम् । 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यादिसूत्रे यत्र काले ये प्रत्यया उक्ताः ते धात्वर्थयोः सम्बन्धे गम्ये ततोऽन्यस्मिन्नपि काले स्युरिति यावत् । तथा च वसन् ददर्शेत्यत्र लडादेशः शतृप्रत्ययो भूतकाले इति सिद्धं भवति । ननु 'वसन् ददर्श' इत्यत्र भूते लडिव वर्तमाने लिडित्यपि स्यादित्यत आह **तिङन्तेति** । वसन् ददर्शेत्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधानम् । वासादिक्रिया तु दर्शनादिक्रियार्थत्वाद् गुणभूता । अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एव इह प्रत्ययाः काला-

---

इति तस्य वाक्यार्थत्वासंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते । ननु 'धातोः कर्मणः समानकर्तृकात्–' इति सन्विधौ कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबन्धोऽस्त्विति चेत् । मैवम् । तथा हि सति परस्परसंबन्धार्थबोधकानेकधातुप्रयोग एव प्रत्ययाः स्युस्ततश्च गोमानासीत् गोमान् भवितेत्यादि न सिध्येत् । न ह्यत्र 'वसन् ददर्श' इत्यत्र वर्तमानकालो वसिरिव वर्तमानकालोऽस्तिः प्रयुज्यते । न चाप्रयुज्यमानस्य धात्वन्तरेण संबन्धोऽस्ति । अर्थयोः संबन्धाभ्युपगमे धातुद्वयाभावेऽपि धात्वर्थद्वयस्य सत्त्वाद् गोमानासीदित्यादौ नानुपपत्तिः । तदेतदभिप्रेत्याह **धात्वर्थानामिति** । विषयबहुत्वापेक्षं बहुवचनम् । एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यम् । एतच्च मनोरमानुसारेण व्याख्यातम् । केचित्तु धात्वोरर्थद्वारकसंबन्धेऽभ्युपगते गोमानासीद्भवितेत्यादि न सिध्येदिति मनोरमोक्तं चिन्त्यमेव । 'तत्करोति तदाचष्टे' इत्यत्रेव 'तदस्यास्त्यस्मिन्–' इत्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात् प्रकृतसूत्रानपेक्षयैव तत्सिद्धेः । न ह्यत्र मतुब्विधौ वर्तमाने लडित्यादाविव कालविशेषपरिग्रहोऽस्तीत्याहुः । तद्भाष्यकैयटाद्यननुगुणम् । तथा हि भाष्ये प्रत्यय इत्यनुवर्तमाने पुनरत्र प्रत्ययग्रहणं किमर्थमित्याक्षिप्य अधातुप्रत्ययानामपि संबन्धे साधुत्वं यथा स्याद् गोमानासीद् भविता वेति समाहितम् । कैयटेन तु 'तदस्यास्त्यस्मिन्निति–' मतुप् प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहित इत्युक्तम् । तथा च मतुब्विधावस्तीत्यत्र एकत्वस्याविवक्षितत्वेऽपि वर्तमानत्वं विवक्षितमिति तद्ग्रन्थबलादवगम्यते । किं च दण्डिनमानयेत्युक्ते वर्तमानसत्ताविशिष्टदण्डयुक्त एवानीयते नान्यः ।

प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकर्तृकं दर्शनमर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्। २८२५

---

न्तरेषु विधीयन्त इत्यर्थः। **भूते लडिति**। एवं च उषित्वा ददर्शेत्यर्थः, तदाह **अतीतेति**। अतीतवासे कर्ता कर्ता यस्येति विग्रहः। 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। उदाहरणान्तरमाह **सोमयाजीति**। सोमेन इष्टवान्यः स सोमयाजी। 'करणे यजः' इति भूते विहितो णिनिरिह भवितेत्यनद्यतनभविष्यल्लुडन्तप्रधानक्रियानुसारेण अनद्यतनभविष्यति बोध्यः, तदाह **सोमेन यक्ष्यमाण इति**। **भवनमिति**। उत्पत्तिरित्यर्थः। गोमानासीदित्यप्युदाहार्यम्। अत्र गौरस्यास्तीति अस्तिक्रियायां वर्तमानायां तदस्यास्तीति विहितो मतुब् गौरस्यासीदिति भूतायामस्तिक्रियायां भवति, धात्वर्थद्वयसंबन्धस्य सत्त्वात्। एतेन अर्थद्वारके धात्वोः संबन्धे इत्यपि व्याख्यानं परास्तम्। तथा सति परस्परसंब-

---

तथा च आसीद् भवितेति तिङन्तपदानुरोधेन गोमानित्यत्र गावोऽस्यासन् गावोऽस्य भवितार इत्यतीतानागतसत्ताविशिष्टप्रकृत्यर्थयुक्तो मतुप्प्रत्ययः प्रकृतसूत्रेणैव विधीयते, न तु तदुक्तरीत्या लभ्यत इति दिक्। ननु तत्तद्विधिवाक्यैरेव स्वविषये प्रत्ययाः सिद्धाः किमनेन सूत्रेणेत्यत आह **यत्र काल इति**। 'वर्तमानसामीप्ये–' इत्यारभ्य कालान्यत्वं प्रायेण प्रतिपाद्यते तदेव चेह गृह्यत इति भावः। वनानि पश्यन् ययावित्यादौ वर्तमानभूतकालादिप्रत्ययेषु को वा स्वकालात्प्रच्युतो भवतीत्याकाङ्क्षायामाह **तिङ्वाच्येति**। प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः। **प्रत्यया इति**। कालान्तरभाजो भवन्तीत्यर्थः। **भूते लडिति**। एवं चोषित्वा ददर्शेत्यर्थः। **अतीतेति**। अतीतवासकर्ता कर्ता यस्य दर्शनस्येति बहुव्रीहिः। **सोमयाजीति**। 'करणे यजः' इति भविष्यति णिनिः। अतएवाह **सोमेन यक्ष्यमाण इति**। एवं च पश्यन् ययावित्यत्र दृशेर्भूते लट्। दृष्ट्वा ययावित्यर्थः। 'निवेदयिष्यतो मनो न विव्यथे' इत्यत्र तु वेदयतेर्भूते लृट् तस्य 'लृटः सद्वा' इति शतृप्रत्ययः, निवेदनं कृतवत इत्यर्थ इत्याद्यूह्यम्। स्यादेतत्—भावि कृत्यमासीदित्यत्र सूत्ररीत्या भाविशब्दस्य भूतकालत्वे स्वीकृते सत्यतीतं भवनमित्यर्थादासीच्छब्दस्याप्येककर्तृकमतीतं भवनमित्यर्थाद् भाव्यासीच्छब्दयोर्युगपत्प्रयोगो न स्यात्। भाविशब्दार्थस्य आसीच्छब्देनैव लाभात्। ततश्चैतावन्तं कालं भावितया व्यवहृतं तदिदानीमासीदित्यर्थोऽत्रावश्यं स्वीकर्तव्यः। स्वीकृते तु गोमानासीदित्यत्रापि गोमानिति व्यवहारविषय आसीदित्यर्थोऽस्तु 'वसन् ददर्श–' इत्यादौ भूते लक्षणया यथायथं लडादिः स्वीकर्तव्यः। सोमयाजीत्यत्र तु भूत एव णिनिप्रत्यये जातेऽपि भवितेति लुडन्तसम-

**क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः । ( ३-४-२ )**
**पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः । तिङामपवादः।**

---

न्वार्थबोधकधातुद्वयप्रयोगे प्रत्यया इत्यर्थलाभाद् गोमानासीदित्यत्र मतुबनापत्तेः । नहि धात्वोरिह प्रयोगोऽस्ति । धात्वर्थयोः सम्बन्धे इत्यर्थाभ्युपगमे तु गोमानासीदित्यत्र धातुद्वयप्रयोगाभावेऽपि धात्वर्थद्वयस्य सत्त्वादासीदित्यर्थे मतुब् निर्बाध इत्यन्यत्र विस्तरः । **क्रियासमभि** । अत्र चत्वारि वाक्यानि । तत्र क्रियासमभिहारे लोडिति प्रथमं वाक्यम् । पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इत्युक्तम् । क्रियासमभिहारे इति धात्वर्थविशेषणम् । क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोरिति लभ्यते । लोट् तु द्योतकः, तदाह **पौनः पुन्ये भृशार्थे च द्योत्ये इति** । क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोर्लोडिति यावत् । सर्वलकारापवादः । लोटो हिस्वाविति द्वितीयं वाक्यं व्याचष्टे **तस्येति** । पूर्ववाक्यविहितस्य लोटो हिस्वावादेशौ स्त इत्यर्थः । **तिङामपवाद इति** । अपवादावित्यर्थः । प्रत्येकाभिप्रायमेकवचनम् । ननु हिस्वयोरुभयोरपि लादेशत्वात् परस्मैपदत्वं स्यात् । तथा सति हेः परस्मैपदत्वं स्वादेशस्य त्वात्मनेपदत्वमितीष्टा व्यवस्था न सिध्येत् । अस्य स्वादेशस्य तङ्प्रत्याहारप्रविष्टत्वाभावेन 'तङानावात्मनेपदम्' इत्यस्याप्रवृत्तेः । 'तिप्तस्झि–' इत्यादिसूत्रोपात्तेषु तातामादिष्वेव तङ्संज्ञाप्रवृत्तेः । किं च अनयोर्हिस्वयोः 'तिप्तस्झि–' इति सूत्रानन्तर्भूत-

---

भिन्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्यध्याहारेण णिनेर्भविष्यदर्थे लक्षणया वा प्रयोगो भवेदिति किमनेन सूत्रेणेति चेत् । अत्राहुः—अध्याहारलक्षणाप्रयुक्तक्लेशं विनैव प्रायशो निर्वाहार्थः सूत्रारम्भः । न हि भावि कृत्यमासीदित्यादौ क्वचिदध्याहारादिकमगत्या भवतीति सर्वत्र तत्स्वीकर्तुमुचितमिति । **क्रियासमभिहारे । द्योत्य इति** । क्रियासमभिहारो धातोरेवार्थः । लोट् तु द्योतक इति भावः । **तस्य च हिस्वौ स्त इति** । ननु लोड् इत्यनेन तिङो लक्षयित्वा तिङामेव हिस्वौ विधीयेताम् । तथा सति तिङन्तत्वात्पदत्वं लभ्यत इति गुणोऽप्यस्ति । वा च तध्वमोरिति वाक्यशेषोऽपि स्वरसतः संगच्छते । अन्यथा येन नाप्राप्तिन्यायेन हिस्वयोस्तिङपवादत्वे सति तध्वमोः स्थाने तयोर्विकल्पेन विधानासंभवादुक्तवाक्यशेषो दुरुपपाद इति चेत् । अत्राहुः—लोट्शब्दस्य तिङ्लक्षणा न न्याय्या असंजातविरोधित्वेनोपक्रमस्य प्राबल्याद्विषयसप्तम्याश्रयणेन वाक्यशेषस्योपपन्नत्वाच्च । किं च तिङामादेशत्वे तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वाद् ङित्त्वाभावेन लुनीहीत्यत्र 'ई हल्यघोः' इतीत्वं न स्यात् । ब्रूहीत्यत्र 'ब्रुव ईट्' इतीडागमे ब्रवीहि इति स्यात् । तृण्ढीत्यत्र तु 'तृणह इम्' इतीमागमे तृणेढीति स्यात् । किं च लादेशानामेव परस्मै-

तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च। तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते। हिस्वविधानसाम-

---

त्वात्तिङ्त्वं च दुर्लभमित्यत आह **तौ चेति**। लोटो हिस्वाविति द्वितीयवाक्ये तावत्क्रियासमभिहारे लोडिति प्रथमवाक्याद् लोडित्यनुवृत्तं स्थानषष्ठ्या विपरिणतं तृतीयं वाक्यं संपद्यते। तत्र हि लोटो हिस्वौ इति द्वितीयवाक्याद् हिस्वावित्यनुवृत्तं धर्मपरमाश्रीयते। तथा च लोडादेशौ हिस्ववद्भवत इति लभ्यते। कौ भवत इत्याकाङ्क्षायां पूर्ववाक्योपस्थितौ हिस्वाविति गम्यते। ततश्च याविमौ तिङन्तर्भूतौ हिस्वावुक्तौ तौ प्रसिद्धलोडादेशतिङन्तर्भूतहिस्ववद् भवत इति तृतीयं वाक्यं पर्यवस्यति। तिङन्तर्भूतहिस्वयोस्तावत् क्रमात् परस्मैपदत्वमात्मनेपदत्वं तिङ्त्वं च प्रसिद्धम्। अतः प्रकृतौ हिस्वौ क्रमात् परस्मैपदात्मनेपदसंज्ञौ स्तः तिङ्संज्ञौ चेत्यर्थः। तिङ्त्वात्पदत्वसिद्धिः। ननु वा च तध्वमोः इति तध्वमोर्हिस्वादेशविकल्पविधिरनुपपन्नः। लोडादेशभूतहिस्वयोस्तिङपवादतया लोटस्तध्वमोरप्रसक्तेरित्यत आह **तध्वमोर्विषये त्विति**। स्थानषष्ठीमाश्रित्य लोडादेशतध्वमोः स्थाने हिस्वावित्यर्थ इति न भ्रमितव्यम्, येनोक्तदोषः स्यात्। किंतु विषयविषयिभावः षष्ठ्यर्थः। तथा च तध्वमोर्विषये लोटो हिस्वौ, पक्षे तध्वमाविति फलतीत्यर्थः। अत्र मध्यमपुरुषबहुवचनमेव तशब्दो गृह्यते। व्याख्यानाद् ध्वंसाहचर्याच्च। ननु हिस्वयोरनयोर्मध्यमपुरुषैकवचनत्वस्याप्यतिदेशाद्युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वौ स्याताम्।

---

पदात्मनेपदसंज्ञे न तु लादेशतिङादेशानामिति सर्वेषां तिर्ङा द्वावपि हिस्वौ पर्यायेण स्यातां न तु तिबादीनां हिस्तर्ङा स्व इति पदव्यवस्थया। ततश्च लकारस्यैवादेशौ हिस्वौ न तु तिङामित्यवश्यं स्वीकर्तव्यमिति। नन्वेवं द्वयोरपि 'लः परस्मैपदम्' इति परस्मैपदसंज्ञा स्यात्ततश्च परस्मैपदिभ्य एव हिस्वौ स्यातामत आह **तौ चेति**। अयं भावः—लोटो हिस्वौ इति वाक्ये 'क्रियासमभिहारे लोट्–' इति वाक्याल्लोडित्यनुवर्तते तच्च हिस्वावित्यस्य विशेषणम्। न च हिस्वौ लोटौ भवत इति सामर्थ्याल्लोड्धर्मकाविर्थः संपद्यते। तत्रापि मुख्यलोट्संबन्धिनो धर्मस्य प्रत्ययत्वस्यातिदेशो व्यर्थः। स्थानिवत्त्वेनैव तत्सिद्धेः, किं तु स्थानिवद्भावलब्धलोड्व्यपदेशकौ तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यते। केचित्तु क्रियासमभिहारे लोडित्यनन्तरं लाघवात्तस्य हिस्वाविति वक्तव्ये लोड्ग्रहणसामर्थ्याल्लोड्धर्मकावेव हिस्वौ लोटः स्थाने भवत इत्यर्थः संपद्यते। तथा च पूर्वोक्तरीत्या तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यत इति सिद्धमिष्टम्। एवं च लोटो हिस्वाविति वाक्ये पूर्ववाक्याल्लोड्ग्रहणं नानुवर्तनीयमित्याहुः। **तिङ्संज्ञौ चेति**। तेन पदत्वं 'तिङ्ङतिङः' इति च भवति। हिस्व-

र्थात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि। आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु। **२८२६ समुच्चयेऽन्यतरस्याम्** (३-४-३) अनेक-

---

तथा च 'इमौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां च वचनानामिष्येते' इति भाष्यमनुपपन्नमित्यत आह **पुरुषैकवचनसंज्ञे त्विति**। हिस्वयोर्मध्यमपुरुषसंज्ञा एकवचनसंज्ञा च नातिदिश्यते इत्यर्थः। कुत इत्यत आह **हिस्वविधानेति**। यदि हिस्वयोर्मध्यमपुरुषैकवचनसंज्ञे स्याताम्, तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव लोटो हिस्वौ स्याताम्, अन्यत्र तु यथायथं तिबाद्यादेशाः स्युः। तथा सति लोटो हिस्वविधानमनर्थकं स्यात्। अतो न पुरुषवचनातिदेश इत्यर्थः। **तेनेति**। हिस्वयोः पुरुषवचनातिदेशाभावेन क्रमात् परस्मैपदात्मनेपदसंज्ञालाभेन चेत्यर्थः। **सकलेति**। सकलपुरुषवचनविषये हिर्भवति। स च भवन् परस्मैपदिभ्य एव कर्तर्येव भवति, न त्वात्मनेपदिभ्यो भावकर्मकर्तृष्वित्यर्थः, शेषात्कर्तरि परस्मैपदमित्युक्तेरिति भावः। **आत्मनेपदिभ्यः स्व इति**। 'अनुदात्तङित आत्मनेपदम्, भावकर्मणोः' इत्यादिसूत्रविषयेभ्यो धातुभ्यो भावकर्मकर्तृषु लोटः स्व एव भवतीत्यर्थः। अनयोरत्र क्रमात् परस्मैपदात्मनेपदसंज्ञाविध्यभावे तु लादेशत्वेन उभयोः परस्मैपदत्वात् कर्तर्येव परस्मैपदमात्मनेपदिभ्योऽपि स्यादिति भावः। **समुच्चये**।

---

**विधान इति**। यदि हि पुरुषवचनसंज्ञे अपि स्यातां तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वाभ्यां भाव्यं तत्र च व्यर्थो हिस्वविधिरिति भावः। **हिः कर्तरीति**। **स्वो भावकर्मकर्तृष्विति**। उक्तं च कैयटेनापि—हिशब्दस्य कर्ता वाच्यः स्वशब्दस्य तु भावकर्मकर्तार इति। अत्र नव्याः—अल्पे ह्रस्वे इत्यादौ कप्रत्ययवत्क्रियासमभिहारे लोडयं स्वार्थिक एव। न त्वस्मिल्लोटि 'लः कर्मणि च—' इत्याद्यर्थोऽभ्युपेयः, प्रयोजनाभावात्। यदि तु हिशब्दस्य कर्ता अर्थः स्यात् (तर्हि) पुनः पुनरतिशयेन वा ल्यानं ह्यन्तस्यार्थ इति वक्ष्यमाणग्रन्थः स्वरसतो न संगच्छेत। याहियाहीत्यादौ तु कर्त्रादिप्रतीतिर्यातीत्यादिसमभिव्याहारेण सुलभैव। यथा एधांचक्रे इत्यत्र तवादेशात्प्रागेव आमः परस्य लेर्लुक्यामन्ते संख्याप्रतीत्यभावेऽपि चक्रे इत्यनुप्रयोगवशेन एककर्तृका वृद्धिरूपा क्रियेत्यविद्यमानापि संख्या प्रतीयते, तथैव हिस्वान्तेष्वपि कालकारकसंख्याप्रतीतिर्यातीत्याद्यनुप्रयोगबलेन भवतीत्याहुः। स्यादेतत्—'क्रियासमभिहारे हिस्वौ लोड्वा च तध्वमोः' इति सूत्रमस्तु। तथा च हिस्वौ लोटौ न भवत इति लोड्धर्मकावित्यर्थः पूर्वोक्तरीत्या स्यादिति सर्वेष्टसिद्धौ किमनेन लोट इति षष्ठ्यन्तकरणेनेति चेत्। अत्राहुः—हिस्वयोर्यदि लोट्स्थानिकत्वं न स्वीक्रियते तर्हि तयोर्लादेशत्वाभावेन 'ई हल्यघोः' इत्यादिप्रवृत्त्या लुनीहीत्यादिसिद्धावपि हिस्वा-

क्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्। **२८२७ यथाविध्यनुप्रयोगः पूर्वस्मिन्।** ( ३-४-४ ) आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः। **२८२८ समुच्चये सामान्यवचनस्य।** ( ३-४-५ ) समुच्चये लोड्विधौ

---

समभिहार इति पदरहितं 'क्रिया लोट् लोटो हिस्वौ वा च तध्वमोः' इति पूर्वसूत्रमनुवर्तते। क्रियेति लुप्तषष्ठीबहुवचनान्तं समुच्चय इत्यत्रान्वेति, तदाह **अनेकक्रियासमुच्चये द्योत्ये इति**। एवं च कारकसमुच्चयमाश्रित्य नास्य प्रवृत्तिः **प्रागुक्तमिति**। धातोर्लोट् तस्य हिस्वौ प्रसिद्धहिस्वधर्मकौ, तध्वमोर्विषये वा इत्युक्तमित्यर्थः। **यथाविध्यनुप्रयोगः**। 'क्रियासमभिहारे–' इति, 'समुच्चयेऽन्यतरस्याम्' इति च लोड्विधी उक्तौ। तयोर्मध्ये यत्पूर्वसूत्रं 'क्रियासमभिहारे–' इति तदेतत्पूर्वशब्देन परामृश्यते, तदाह **आद्ये लोड्विधाने इति**। विधिमनतिक्रम्य यथाविधि। यस्याः प्रकृतेः लोड्विहितः तस्या अनुप्रयोग इति लभ्यते, तदाह **लोट्प्रकृतिभूत एवेति**। अत्रानुप्रयोगः पश्चात्प्रयोगः, न त्वव्यवहितत्वं विवक्षितम्, लुनीहि लुनीहि इत्येवायं लुनातीति भाष्यप्रयोगाल्लिङ्गात्। **समुच्चये**

---

न्तस्य लोडन्तत्वं न सिध्येत्। तथा च हन्त चेत्यनुदात्तविकल्पो न स्यात्। हन्त प्रलुनीहिप्रलुनीहीत्ययं लुनाति। एवं च लोडन्तत्वलाभार्थं लोटो हिस्वाविति विधीयते। यदि तु हिस्वौ लोडित्युक्तेऽपि लोड्भावाश्रयेण लोट्कार्यं हन्त चेति स्वरविकल्पः सिध्यतीति ब्रूषे तर्हि स्थानिवद्भावलब्धलोड्धर्मकौ हिस्वावित्यर्थस्यानाश्रयणाल्लोडादेशकार्याणि परस्मैपदात्मनेपदसंज्ञादीन्यपि न सिध्यन्ति। तथा च पूर्वोक्तदोषस्तदवस्थः स्यात्। लोट् लोटो हिस्वौ इत्युक्ते तु स्थानिवद्भावेन हिस्वयोर्लोट्त्वाल्लोडन्तकार्यं स्वरविकल्पः सिध्यति, 'क्रियासमभिहारे लोट्' इति वाक्याल्लोडित्यनुवर्त्य हिस्वौ लोडिति प्रागेव व्याख्यातत्वाल्लोडादेशवद्भावेन परस्मैपदात्मनेपदसंज्ञादीन्यपि सिध्यन्तीति। **समुच्चये**। चिनोतर्भावे 'एरच्' इत्यच्। **प्रागुक्तमिति**। धातोर्लोट् लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः। **यथाविध्यनु**। पूर्वस्मिन्क्रियासमभिहारविषये। अत्र संख्याकारकादीनां हिस्वान्तादप्रतीतेस्तद्बोधनायानुप्रयोगो न्यायत एव प्राप्तस्तदनुवादेन यथाविधीति नियम्यते। तथा च पक्षे प्राप्तस्य नियमनाद्याहियाहीति गच्छतीत्यादि न भवति। यद्यप्यन्यत्र 'इन्हन्पूषार्यम्णां शौ' इत्यादौ नियमशब्देन परिसंख्या व्यवह्रियते 'सर्वनामस्थाने च–' इत्यादिना शौ तद्भिन्ने च दीर्घे प्राप्ते शेरन्यत्र तु तन्निवृत्तिपरत्वात्तथापीह कदाचिद्यातीत्यस्य कदाचिद्गच्छतीत्यस्यानुप्रयोगे प्राप्ते यथाविधीत्ययमप्राप्तांशपरिपूरणाय 'व्रीहीनवहन्ति' इत्यादिवद्विधीयत इति नियमविधिरेवायम्। एतेन मीमांसकप्रसिद्धनियमविधिः शब्दशास्त्रेऽप्रसिद्ध इति वदन्तः

---

१ 'लोडन्त' इति क्वचित् पाठः।

